# *अमृत संजीवन धन्वन्तरि स्तोत्रं*

*श्रीसुदर्शन संहिता*

नमो नमो विश्वविभावनाय नमो नमो लोकसुखप्रदाय ।
नमो नमो विश्वसृजेश्वराय नमो नमो मुक्तिवरप्रदाय ॥ 1 ॥

नमो नमस्तेऽखिललोकपाय नमो नमस्तेऽखिलकामदाय ।
नमो नमस्तेऽखिलकारणाय नमो नमस्तेऽखिलरक्षकाय ॥ 2 ॥

नमो नमस्ते सकलार्तिहर्त्रे नमो नमस्ते विरुजः प्रकर्त्रे ।
नमो नमस्तेऽखिलविश्वधर्त्रे नमो नमस्तेऽखिललोकभर्त्रे ॥ 3 ॥

सृष्टं देव चराचरं जगदिदं ब्रह्म स्वरूपेण ते
सर्व तत्परिपाल्यते जगदिदं विष्णु स्वरूपेण ते ।
विश्वं संह्रियते तदेव निखिलं रुद्र स्वरूपेण ते
संसिच्यामृत शीकरैर् हर महारिष्टं चिरं जीवय ॥ 4 ॥

यो धन्वन्तरि संज्ञया निगदितः क्षीराब्धितो निःसृतो
हस्ताभ्यां जन जीवनाय कलशं पीयूष पूर्णं दधत् ।
आयुर्वेदमरीरचज् जनरुजां नाशाय स त्वं मुदा
संसिच्यामृत शीकरैर् हर महारिष्टं चिरं जीवय ॥ 5 ॥

स्त्रीरूपं वरभूषणांबरधरं त्रैलोक्य सम्मोहनं
कृत्वा पाययति स्म यः सुरगणान् पीयूषं अत्युत्तमम् ।
चक्रे दैत्यगणान् सुधाविरहितान् सम्मोह्य स त्वं मुदा
संसिच्यामृत शीकरैर् हर महारिष्टं चिरं जीवय ॥ 6 ॥

चाक्षुषोदधि संप्लाव भूवेदप झषाकृते
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ।
पृष्ठ मन्दर निर्घूर्ण निद्राक्ष कमठाकृते
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 8 ॥

धरोद्धार हिरण्याक्ष घात क्रोडाकृते प्रभो ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 9 ॥

भक्त त्रास विनाशात्त चण्डव नृहरे विभो ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 10 ॥

याञ्छाञ्छल बलि त्रास मुक्त निर्जर वामन ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 11 ॥

क्षत्रियारण्य संछेद कुठारकररैणुक ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 12 ॥

रक्षो राज प्रतापाऽब्धि शोषणाशुग राघव ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 13 ॥

भूभरासुर सन्दोह कालाग्ने रुक्मिणीपते ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 14 ॥

वेदमार्गरतान् अर्ह विभ्रान्त्यै बुद्धरूपधृक् ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 15 ॥

कलिवर्णाश्रमास्पष्ट धर्मर्द्धयै कल्किरूपभाक् ।
सिञ्च सिञ्चामृतकणैः चिरं जीवय जीवय ॥ 16 ॥

असाध्याः कष्टसाध्या ये महारोगा भयङ्कराः ।
छिन्धि तानाशु चक्रेण चिरं जीवय जीवय ॥ 17 ॥

अल्पमृत्युं चाऽपमृत्युं महोत्पादान् उपद्रवान् ।
भिन्धि भिन्धि गदाघातैः चिरं जीवय जीवय ॥ 18 ॥

अहं न जाने किमपि त्वदन्यत् समाश्रये नाथ पदांबुज ते ।
कुरुष्व तद्यन् मनसीप्सितं ते सुकर्मणा केन समक्षमीयाम् ॥ 19 ॥

त्वमेव तातो जननी त्वमेव त्वमेव नाथश्च त्वमेव बन्धुः ।
विद्या धनागार कुलं त्वमेव त्वमेव सर्वं मम देवदेव ॥ 20 ॥

न मेऽपराधं प्रविलोकय प्रभोऽपराध सिन्धोश्च दयानिधिः त्वम् ।
तातेन दुष्टोऽपि सुतः सुरक्ष्यते दयालुता तेऽवतु सर्वदाऽस्मान् ॥ 21 ॥

अहह विस्मर नाथ न मां सदा करुणया निजया परिपूरितः ।
भुवि भवान् यदि मे नहि रक्षकः कथमहो मम जीवनमत्र वै ॥ 22 ॥

दह दह कृपया त्वं व्याधि जालं विशालं
हर हर कर बालं चाऽल्पमृत्योः करालम् ।
निज जन परिपालं त्वां भजे भावयालं
कुरु कुरु बहुकालं जीवितं मे सदाऽलम् ॥ 23 ॥

क्लीं श्रीं क्लीं नमो भगवते जनार्द्दनाय
सकल दुरितानि नाशय नाशय
क्ष्रौं आरोग्यं कुरु कुरु
ह्रीं दीर्घमायुर् देहि स्वाहा ॥ 24 ॥

॥ फलश्रुतिः ॥

अस्य धारणतो जापाद् अल्पमृत्युः प्रशाम्यति ।
गर्भरक्षाकरं स्त्रीणां बालानां जीवनं परम् ॥ 25 ॥

सर्वे रोगाः प्रशाम्यन्ति सर्वा बाधा प्रशाम्यति ।
कुदृष्टिजं भयं नश्येत् तथा प्रेतादिजं भयम् ॥ 26 ॥

॥ इति श्रीसुदर्शन संहितायां अमृत सञ्जीवन धन्वन्तरि स्तोत्रं संपूर्णम् ॥